


Sri Krishna!

# KARMA-THRAYA

AND

# MATHA-THRAYA

BY

The Maharajah of Bobbili,
K. C. I. E.



ADDISON PRESS.

॥ श्रीकृष्ण ॥




# ॥ कर्मत्रय विमर्शः ॥

आगामि सञ्चित प्रारब्धभेदेन कर्मण स्त्रैविध्यं श्रूयते । प्राचीनग्रन्थेषु कुत्राप्येतद्विषयविचारो विस्पष्टो नकृतः । प्रत्युत दैवपौरुषाभ्यां मिश्रीकृत्य सन्दर्भविरुद्धं परिष्कृत इति प्रतिभाति ॥

किञ्च ॥ श्लो ॥ इच्छानिच्छापरेच्छाच प्रारब्धं त्रिविधं स्मृतम् ॥

इति वेदान्त पञ्चदश्या मिच्छानिच्छा परेच्छाभेदेन प्रारब्धस्यैव त्रैविध्यं प्रत्यपादि । गीताशास्त्रेऽपि कर्माकर्म विकर्मेति कर्मणएव त्रैविध्य मभाणि । पूर्वोदाहृत नानाविध विभागपर्यालोचनया व्यत्यस्तमतयोऽस्मद्देशीयपण्डिता निर्विचिकित्सं निष्कृष्य वक्तु मवकाशं नालभन्त । तेषु शान्त मनस्काः केचन विद्वांसः दृष्टास्सन्तोऽस्मद्ग्रन्थेष्वेतद्विषयः स्पष्टतया क्वापि नोक्त इति वदन्ति । दुराग्रहशीलास्तु केचन सयुक्तिक मुत्तरं दातु मसमर्था एतादृशाविषयान् प्रष्टुमेते

कियन्त इत्याग्रहमेवोत्तरयन्ति । केचित्तु बुभुत्सया कृतं प्रश्नं सम्यक्समाधातु मनवकाशतया तर्हि तथैव भवत्विति स्ववादविरोधमप्यविगणय्य पृच्छकमतानुसारेण वाद मुपसंहर्तुं प्रयतन्ते । मतत्रयभाष्यकर्तारोऽप्येतद्विषये परस्परविरोधानचिन्तयन्तः स्वस्वमतानुसारेण स्वीयभाष्यग्रन्थेष्वलिखन् । निर्विचिकित्सं विविच्य वक्तुमशक्यमेतद्विषयं परिष्कर्तुं किमर्थमेते व्यवस्यन् कथंवा परिष्कर्तुं शक्नुयु रिति चास्मल्लिखितैतदुपन्यासं पठतां शृण्वताञ्च मनस्यवश्यमेव शङ्का जायेत । यत एतत्कर्मत्रयविषये पृष्टाः केपि निस्संशयं विविच्य वक्तुं नाशक्नुवन् । किञ्च अस्मद्ग्रन्थाभिहितः कर्म विभागः परस्परविरुद्ध इव भाति । अतोऽस्मद्ग्रन्थेषु परस्पर विरुद्धतया ग्रन्थकृद्भिः स्वस्वमत्यनुसारेण सन्दर्भविरुद्धं किमर्थं व्यलिख्यत । अत एतद्विषये सुष्ठु परिशीलनं कर्तव्यमिति प्रप्रथममेव स्वभावतो ममावसरस्समजनि । तदनन्तरं विद्वद्भिस्तत्तद्ग्रन्थस्थतत्तद्भागानुद्धृत्यापाठयम् । अश्रौषञ्च तदवसरे श्रद्धया । अकार्षञ्च पुनस्तैरेव साकं विचार्यैतद्व्यासविलेखनोद्योगम् । यदिस्यादस्मत्कृतविभागश्शास्त्रयुक्त्यनुरोधी तर्हि युष्माभिराद्रियताम् । नोचेदयञ्च विभागः पूर्वोदाहृत तत्तद्विभागवत् विरुद्धएव भवेत् । किञ्चास्मत्कृत मतत्रय



श्रीकृष्णाविषयोपन्यासद्वयं दृष्ट्वा मतपक्षपातिनो देवानांप्रिया यथाममन्यन्त तथाहं मतपक्षपातबुद्ध्या नैतद्व्यासमरचयम् । अन्यच्च ज्योतिश्शास्त्रविषये अविवेकविश्वास विषयेचास्मदुपन्यस्तव्यासद्वयं पठित्वा यथा केचन विचार विधुरा व्यतर्कयन् तथा संघसंस्कारकरणार्थमपि मयैतद्व्यासो नलिखितः । किन्तु पण्डितसाहाय्येन मया सम्यग्विचार्य परिष्कृतानामेतद्विषयाणा मक्षररूपेण विन्यासोऽवश्य मस्मदुपयोगायैवेतिवा कदाचिद्भविष्यत्पाठकाना मुपकारार्थं साहाय्यार्थंवा भवेदिति विचिन्त्यैतावन्तं प्रयासमगृह्णम् ॥

आगामि सञ्चितं प्रारब्धमिति सामान्यतः कर्म त्रिविधं निरूपितम् । तत्र भविष्यज्जन्मनि फलानुभावकमागामि । अतीतानेकजन्मसु संपादितं सञ्चितम् । वर्तमानजन्मनि फलानुभावकं प्रारब्धम् । अनुभवश्चात्र सुख दुःख विषय इति सुव्यक्तंहि ॥

दैवपौरुषविषये युधिष्ठिरकृतप्रश्नस्य भीष्मदत्तोत्तरे दैवं नाम परमेश्वर एवेति श्रीमहाभारतानुशासनिकपर्वणि स्फुटतयाऽवगम्यते । नतु पूर्वजन्मकर्म यद्वा प्रारब्धमिति प्रतीयते यथा केचन मन्वते । दैवपौरुषयोर्मध्ये पौरुषस्यैव प्राधान्यं

भीष्माभिप्रेतम् । तत्रैवारण्यपर्वणि द्रौपदीयुधिष्ठिरसंवादे द्रौपद्यपि पौरुषस्यैव प्रामुख्यमभाणीत् । यद्यपि कौशिक धर्मव्याधसंवादे धर्मव्याधो दैवस्यैव प्राधान्यमवादीत् तथापि धर्मव्याधवृत्तान्तस्य नीतिबोधार्थं कल्पितत्वेन नायमस्मत्प्रकृतोपन्यासप्रतिकूलः ॥

आगामिकर्मणएव केचिद्वर्तमानकर्मेति संज्ञां वदन्ति । तथाचोक्तम् । देवीभागवते कंसकृत देवकीसप्तसुतवधप्रस्तावे ॥ श्लो ॥ त्रिविधानीह कर्माणि संसारेऽत्रपुराविदः । प्रवदन्तीह जीवानां पुराणेष्वागमेषुच ॥ सञ्चितानिच कर्माणि प्रारब्धानि सुमध्यमे । वर्तमानानि वामोरु त्रिविधानीह देहिनाम् ॥ तत्रैव कर्मणां गतिविशेष विचारे ॥ श्लो ॥ कर्मणस्तु त्रिधा प्रोक्ता गतिस्तत्त्वविदां वरैः। सञ्चितं वर्तमानञ्च प्रारब्धमिति भेदतः ॥ अतस्तस्य वर्तमानकर्मसंज्ञैव सम्यक्संघटते । दैवपौरुषविषयस्त्वेतद्वर्तमानकर्मसंबन्ध्येव । तस्माद्दैवंनाम प्रारब्धमिति कथनन्त्वविवेकमूलम् ॥

पुरा कदाचिन्महामहोपाध्याय परवस्तुरङ्गाचार्य पण्डितवर्यैस्सह संभाषणावसरे दैवपौरुषविषयमपृच्छम् । केवलदैविक केवलपौरुष दैवपौरुषमिश्रभेदेन त्रैविध्यं कार्यजातस्येत्यब्रुवंस्ते।



दैवंनाम प्रारब्धमिति भ्रमेण पुराणादिष्वपि विलिखितमस्ति । पूर्वजन्मकृतस्यापि कर्मणः पौरुषत्वात् तस्यैव दैवमित्यस्मिञ्जन्मनि व्यवहारइति पौरुषातिरिक्तं दैवं नास्तीति मत्स्यपुराणे दैवपुरुषकारतारतम्यविचारे ॥ श्लो ॥ स्वमेव कर्म दैवाख्यं विद्धि देहान्तरार्जितम् । तस्मात्पौरुष मेवेह श्रेष्ठमाहुर्मनीषिणः ॥ इत्यभिहितम् । एतदपि दैवपदस्य प्रारब्धाभिप्रायकतया पूर्ववदसमञ्जसम् ॥

महाभारते ॥ सन्धिकार्यार्थं श्रीकृष्णगमनप्रसङ्गे ॥ श्लो ॥ अहंहि तत्करिष्यामि परं पुरुषकारतः । दैवन्तु नमया शक्यं कर्म कर्तुं कथञ्चन। इतिखल्वर्जुनंप्रति श्रीकृष्णभगवतोक्तम् ॥ पौरुषेणकर्तव्यं हितं युष्माकमहं करिष्यामि । दैवेन कार्यं कर्म कर्तुं कथमहं शक्नुयाम् । इत्येवास्य श्लोकस्याभिप्रायः । एतत्पर्यालोचनया दैवं पौरुषात् पृथगिति दैवशब्दाभिधेयं न प्रारब्धमिति च स्फुटतरमवभासते । यदिच दैवशब्देनात्र प्रारब्धमेवोच्येत तदा प्रारब्धंनाम तत्पूर्वकृतं कर्मैवहि । दैवेन कार्यं कर्मकर्तुं नालमहमिति कथनादितःपरं सर्वेश्वरेण कर्तव्यं साहाय्यमेवेति बलादप्यङ्गीकरणीयम् । अतो दैव शब्देन सत्कर्मसुविषये परमेश्वरेण क्रियमाणं साहाय्यं यद्वा प्रेरणमित्येव वक्तुमुचितम् । नतु प्रारब्धम् । यद्यपि वर्तमान

सुखदुःखयोर्वर्तमानकर्मणश्च पौरुषाधीनत्वे दैवेन किंप्रयोजन मिति केषाञ्चिच्छङ्का जायेत । तथापि कृषिसन्धियुद्धादि कार्येषु दैवसाहाय्यमावश्यकमित्यनुभवबलादङ्गीकरणीयम् । सत्कर्मविषयेतु किमुत । तत्सिद्धमेवखलु । पुरुषेणारब्धेषु स्वस्थित्यतीताशयाऽनाक्रान्तेषु सत्कर्मसु परमेश्वरस्सहायो भवतीति न केवलमस्मद्धिन्दूमतस्थाः किन्तु क्रैस्तव महम्मदीयाद्यास्तिकमतस्थास्सर्वेप्यङ्गीकृत्य विश्वसन्ति ॥ श्लो ॥ अधिष्ठानं तथा कर्ता करणञ्च पृथग्विधम् । विविधाच पृथक् चेष्टा दैवञ्चैवात्र पञ्चमम् ॥ इति गीताशास्त्रे कार्यसाधनानि पञ्चेति श्रीकृष्णभगवानुवाच । अत्र श्रीकृष्णभगवानर्जुनं युद्धाय प्रेरयति। अत एतदवसरे पौरुषस्य दैवसाहाय्यमावश्यक मित्यभिप्रायः । पुरुषस्य व्यापारः कर्मवा पौरुषमित्यभिधीयते । कर्मणोजडतया तत्स्वयमेव भवितुं नालमतो देहेन्द्रियजीवादयस्तन्निष्पत्तिसाधनानि । किञ्च सन्दर्भान्तरे ॥ श्लो ॥ कर्मणोह्यपि बोद्धव्यं बोद्धव्यञ्च विकर्मणः । अकर्मणश्च बोद्धव्यमित्यादिना कर्माकर्म विकर्मभेदेन कर्मणास्त्रिप्रकारतां श्रीभगवानुवाच । अयञ्च विभागो वर्तमान कर्म संबन्ध्येव भवति । किञ्च स्थलान्तरे ॥ श्लो ॥ शरीर वाङ्मनोभिर्यत्कर्म प्रारभतेनरः । न्याय्यंवा विपरीतंवा पञ्चैते तत्र हेतवः ॥ इति



न्याय्यस्यवा विपरीतस्यवा कर्मणो दैवसाहाय्यमपेक्षितमिति श्रीभगवानभिदधे । अत्र विपरीतकार्यपदस्य दुष्टकार्यपरत्वं केचनोचुः । किन्दुष्टकार्येष्वपीश्वरस्साहाय्यं करोति ? अहो अविवेकविलसितमिदम् । लोकेऽसत्कार्ये प्रवृत्तम् पुमांसं दृष्ट्वा कथमस्य परमेश्वरस्साहाय्यं कुर्यादिति पामराअपि वदन्तिहि । प्रकृते बहूनां गुरुबन्धुमित्रादीनां हननमन्याय्यमिति युद्धपराङ्मुखमर्जुनं स्वकर्मणियुद्धे प्रेरयन् श्रीभगवान् यद्यत्कर्म येषां विहितं तत्तत्तैरवश्यमेवाचरणीयमिति ब्रवीति । तादृशानि कर्माणि केवलसात्त्विकानि राजसानिवा भवेयुः । तस्मादत्रन्याय्यं कर्मेत्यनेन सात्त्विककर्मेति सात्त्विकेत्यनेन हिंसा रहितकर्मेतिच संदर्भमनुसृत्य भगवताविवक्षितमिति वक्तुमुचितम्। युद्धादिराजसकर्माणि हिंसायुक्ततया पूर्वोक्त सात्त्विककर्मभ्यो विपरीतानीति श्रीभगवतोऽभिप्राय इति स्फुटमवगम्यते । अन्यथा दुष्टकार्येषु भगवत्साहाय्यमस्तिकिम् ॥ तस्मात्संदर्भानुसारेणापि न्याय्यपदेन हिंसारहितसात्त्विककर्मेति विपरीतपदेन हिंसायुक्तयुद्धादिराजसकर्मेति चानिच्छताप्यवश्यं विवक्षणीयम् ॥ श्लो ॥ ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयंत्सर्वभूतानि यन्त्रारूढानि मायया ॥ बुद्धीन्द्रियादि युक्तशरीरवतां प्राणिनां हृदये स्थित्वा तान्विहितकर्मसु

प्रकृत्या परमेश्वरः प्रेरयतीत्येव गीतावचनस्यास्याभिप्रायः । अत्रापि सन्दर्भमनुसृत्य विहितकर्मसु प्रेरयतीत्येव वक्तव्यं नतु सर्वकर्मस्विति यथा केचन मन्वते । पुरुषेण क्रियमाणे कार्य मात्रेऽप्यन्तर्यामितया परमेश्वरस्य प्रेरकत्वे दुष्टकार्येष्वपीश्वरस्य प्रेरकत्व मङ्गीकरणीयम् । तत्तु सन्दर्भविरुद्धं लोकानुभवविरुद्धञ्च । प्रकृते श्रीभगवानर्जुनं युद्धाय प्रेरयति । अर्जुनस्तु प्रवृत्तिपरएव नतु निवृत्तिमार्गपरः । प्रवृत्तिपरेणारब्धे विहितकर्मणि श्रीभगवांत्साहाय्यं करोति । अतः प्रवृत्तिमार्गपरो भवान् वर्णाश्रममर्यादानुसारेण विहिते युद्ध कर्मणि पराङ्मुखो माभूत् । यदिच विहितमिदं कर्म नकरिष्य इति मन्यसे तदा प्रकृतिरेव त्वां तत्कर्मणि नियोक्ष्यतीति भगवतोऽभिप्रायः । एतदभिप्रायेणैव ॥ श्लो ॥ यद्यहङ्कारमाश्रित्य नयोत्स्य इतिमन्यसे । मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ इति भगवानवोचत् । तस्माद्दैवपौरुषयोर्मध्ये पौरुषमेव प्रधानम् । सत्कर्मस्वीश्वरस्साहाय्यं कुर्यादितिसिद्धम् । यत्रयत्र दैवमेव प्रधानमिति दृश्यते तत्र सर्वत्रापि निवृत्ति मार्गपरमुद्दिश्य तथाप्रोक्तमिति स्वीकरणीयम् । निवृत्तिपरस्तु मया कर्तव्यं किमस्ति । यथेश्वरसंकल्प स्तथा सर्वं भवेदिति वर्तमानकर्मणि कर्तृत्वाभिमानं तत्फलापेक्षाञ्च परित्यज्यखलु



ज्ञानसंपादने प्रयतेत । पूर्वोक्तपञ्चदश्यामिच्छानिच्छापरेच्छाभेदेन प्रारब्धं त्रिविधमिति प्रारब्धस्य विभागोऽदर्शि । अत्र प्रारब्धशब्देनागामि सञ्चितप्रारब्धरूप कर्मत्रयान्तर्गत प्रारब्धमेव यद्युच्यते तदाऽगामिकर्मणोऽभावप्रसङ्गस्समापद्येत । नचात्र वर्तमानकर्मप्रवृत्तिप्रयोजकेच्छाजनकं कर्म प्रारब्धशब्देनोच्यत इति वाच्यम् । तथासति पुरुषप्रवृत्तिमात्रे प्रारब्धस्यैव प्रयोजकत्वे पुरुषस्य स्वातन्त्र्याभावेन पुण्यपापाभावप्रसङ्गस्य दुर्वारत्वात् । तथैव स्वविषयेऽन्यकृतस्यापि कर्मणस्स्वप्रारब्धाधीनत्वेनान्यस्य फलाभावप्रसङ्गाच्च । अत आगामि सञ्चितप्रारब्धान्तर्गत प्रारब्धमेव पञ्चदश्युक्तप्रारब्ध पदेन ग्रहीतुं नशक्यते । किन्त्वस्मिंत्सन्दर्भे प्रारब्धंनाम गतजन्मन्येतज्जन्मनिवा प्रारब्धं सत् ज्ञानोत्पत्त्या विनाश्यं कर्ममात्र मित्यवश्यं ग्राह्यम् । अतएवेच्छानिच्छापरेच्छारूपेषु कर्मस्वनिच्छाकर्मैव प्रारब्धसंज्ञकंभवति । इच्छाकर्मत्वागामि वर्तमानं वा भवेत् । नच स्वप्रारब्धात् स्वीयवर्तमानाद्वा कर्मणएव स्वस्य सुखदुःखानुभवो नियतइति वक्तुमुचितम् । लोके कदाचित् कस्यचिदन्यदीयकर्मणापि सुखदुःखानुभवदर्शनात् । नच तत्कर्म स्वस्य प्रारब्धं वर्तमानंवेति शक्यते वक्तुम् । यतोऽन्यदीयवर्तमानरूपत्वात्तस्य । अन्यथा परकीयवर्तमानकर्मणा

स्वस्य सुखदुःखानुभवसंभवदशायामपि स्वसुखदुःखानुभावकं तत्कर्म स्वप्रारब्धमेवेति यद्युच्येत तर्हि तत्कर्मणा-परस्य पुण्य पापप्रसक्तिरेव नस्यात्। तस्मात् पूर्वोक्तरीत्या वर्तमानजन्मन्यपि प्रारब्धंसत् ज्ञानोत्पत्तिविनाश्यं कर्ममात्रं वेदान्त पञ्चदश्या-मिच्छानिच्छा परेच्छाभेदेन त्रिधाविभक्तमिति सुष्ठुग्राह्यम्। एवं दैवपौरुषयोः कर्माकर्मविकर्मणामिच्छानिच्छापरेच्छा-नाञ्च विवरण मकारि ॥

किन्तु पूर्वोदाहृतविभागानागामि सञ्चित प्रारब्धैस्सङ्कीर्य नभ्रमितव्यम् ॥

किञ्च जन्मान्तरवासना नाम प्रारब्धमिति केचि-द्भ्राम्यन्ति । प्रारब्धंत्ववश्यमनुभोक्तव्यं खलु । जन्मान्तर वासनातु पुरुषं व्यापारे प्रेरयति। शक्यते च पौरुषेण निवर्त-यितुं । अतो जन्मान्तरवासनायास्सञ्चितकर्मण्यन्तर्भाव इति कथनं किञ्चिदिव समञ्जसं भवेत् । नतु प्रारब्धेऽन्तर्भाव-स्समुचितः । ममाशयस्तु सञ्चितकर्मण्यपि नान्तर्भावोयुक्त इति । जन्मान्तरवासनातु पूर्वजन्मवासनेति च व्यवह्रियते । वासनानाम अभ्यासः। एतज्जन्मनि निरन्तराभ्यासवशात्कानि-चित्कार्याणि बुद्धिबलमनपेक्ष्य अवशेनैव भवेयुः। पूर्णश्रद्धया



निरन्तराभ्यस्तेषु केषुचित्कार्येषु तदानीमकृतेष्वपि तदीया-भ्यासस्तु नत्यक्तुं शक्यतेऽस्माकम्। विध्युक्तगमनाभ्यासी सैनिक स्सेनासञ्चारं विना स्वीयनित्यगमनेऽपि स्वाभ्यासमनुसृत्यैव पादन्यासं करोति । सांगीतिक स्संगीतावसरं विनाप्यभ्यास-वशात्स्वांगुळिचलनं कुर्यात् । तथैव पूर्वस्मिन्जन्मन्यति-परिचितेषु कर्मसु अभ्यस्तासुच विद्यास्वेतज्जन्मनि तदभ्यास-वशात्पुरुषस्य बुद्धिः प्रसरति। अतो बुद्धिमान् त्सद्वासनां सत्कार्येष्वाभिवर्धयन्नसद्वासनां निवर्तयेत् । एवञ्च त्यक्तेऽपि पूर्वजन्मन्यनुवर्तमानो बलवानभ्यासएव जन्मान्तरवासनेति सिद्धम्। नतु प्रारब्धं नापि सञ्चितमिति । इतःपरमेतात्रिविधं कर्मविभागं विमृशामः ॥

---

## ॥ आगामि कर्म ॥

यद्यप्यागामिशब्दो भविष्यत्कालभावि वदति । केचन भविष्यज्जन्मानुभाव्यं कर्मेत्यपि वदन्ति। तथापि भविष्यज्जन्म-नि सञ्चितकर्मणोऽप्यनुभाव्यत्वप्रसक्तौ वर्तमानजन्मकृत कर्ममात्रमागामिशब्दवाच्यं नस्यात् । तस्माद्वर्तमानकर्मेत्येव कथनं सम्यक्प्रतिभाति। एतज्जन्मनि पौरुषेण क्रियमाणं भवि-ष्यति जन्मनि जन्मसुवाऽनुभाव्यं कर्मेत्युक्तौ समञ्जसंभवेत्।

तादृशवर्तमानकर्मणां मध्ये शास्त्रकुलाचारविहित सत्कर्मसु विषये परमेश्वरः प्रेरयेत् । नकेवलं निषिद्धकर्मसु । अपितु मध्यमकर्मस्वपि भगवान्नप्रेरकः । एतज्जन्मन्येव फलानुभावकानि शरीरनैजकर्माणि मध्यमकर्माणीत्युच्यन्ते । यथा नित्यं व्यायामकरणाच्छरीरस्य दार्ढ्यं भवेत् । अकरणेच दार्ढ्यं चिरंनतिष्ठति । शुचिमितहिताहारपदार्थभोजनादारोग्यं स्यात् । अन्यथा नस्यात् । नकेवलमेतादृशलाभालाभजनकानि । किंतु । अकरणे हानिमकृत्वा करणे सुखजनकान्यपि कर्माणि सन्ति । यथा । स्वीयायां रतिस्सौख्यं ददाति ॥ अकरणेतु नकापिहानिः । नपुंसकस्सन् रतीच्छाशून्यो भवतीतियत्तत्र प्रारब्धं हेतुः । अनर्घवस्त्रभूषणादिधारण मतिरुच्यपदार्थभोजनञ्च धनिनां सुखजनकम् । आढ्यानामपि साधारणवस्त्रभूषणाहारपदार्थानुभवो न दुःखाय । एतादृशमध्यमकर्मस्वपि दैवसाहाय्य प्रसक्तिर्नास्ति ॥

---

॥ सञ्चितकर्म ॥

अत्र सञ्चितकर्मेति किमर्थमंगीकरणीयमिति विचार्यते । गतेजन्मनि जन्मसुवा कृतंकर्मैतज्जन्मन्यनुभूयते । एतज्जन्मनि क्रियमाणे कर्मणि किञ्चित्कर्मैतज्जन्मन्येव फलाधायकंभवति ।



शेषस्य कर्मणः फलन्तु भविष्यतिजन्मनि जन्मसुवाऽनुभूयते । एवं स्थिते सञ्चितकर्माङ्गीकारे किंप्रयोजनमिति । अत्रोच्यते । गतजन्मकृतस्य सर्वस्यापि कर्मणः फलस्यैकस्मिन्जन्मनि निश्शेषतयाऽनुभवितुमशक्यत्वेऽनुभूताच्छिष्टं कर्मास्तीत्यवश्यमभ्युपगन्तव्यम् । तदेव कर्म सञ्चितमित्युच्यते । तथाहि आजन्मान्तं रोगारोग्यरूपविरुद्धफलप्रापकस्य दारिद्र्यधनिकत्वरूप विरुद्धफलप्रापकस्यवा गतजन्मकर्मणस्सत्त्वे एकस्मिञ्जन्मनि तत्फलं नकेनाप्यनुभवितुं शक्यते । किञ्च आजन्मान्तं राजत्व वेदविहितकर्मकृद्ब्राह्मणत्व कर्षकत्वरूप मिथोविरुद्धफलानुभावकस्य नानाविधस्य गतजन्मकर्मणो नानाविधं फलमेकस्मिञ्जन्मनि कोवाऽनुभवितुं शक्नुयात् । अतस्सञ्चितकर्माङ्गीकार आवश्यकः । गतेजन्मनि जन्मसुवा कृत मेतज्जन्मनि निश्शेषमनुभवितुमशक्यतया शिष्टं सर्वं कर्म सञ्चितमित्यभिधीयते ॥

---

॥ प्रारब्धकर्म ॥

एतज्जन्मन्यनुभूयमानं सर्वमपि कर्म प्रारब्धमिति केचिद्वदन्ति । तन्नसम्यक् । पौरुषस्य निष्फलत्वापत्तेरशक्यपरिहारत्वात् । किञ्च कस्यचित्केनाचिद्दुःखे मरणेवा प्रापिते

प्रापकस्य पातित्यप्रसक्तिरेव नस्यात् । अनुभवितुः प्रारब्धवशादेव तादृशानुभवसंभवे कर्तुः पुरुषान्तरस्य पापलेपाङ्गीकारो निर्निमित्तकएव भवेत् ॥

विश्वामित्रमुनिना हरिश्चन्द्रमहाराजस्य वाचामगोचरं दुःखजातं दत्तंननु । सर्वस्यापि तद्दुःखस्य हरिश्चन्द्रप्रारब्धाधीनत्वे तद्दातुर्विश्वामित्रस्यापराधो नस्यादेव । अपराधसद्भावादेवखलु विश्वामित्रश्चिरंतनार्जितस्वीयतपःफलं हरिश्चन्द्र महाराजाय धारापूर्वकं ददौ । भृत्यस्सापराध इति भ्रमेण यजमानः वृथैव तं दण्डयित्वा पश्चात्स्वीयभ्रांतिं ज्ञात्वा तस्मै कदाचित्पारितोषिकमपि दद्यात् । पुण्यसंपादनार्थमेकादशीव्रतांगतयोपवासमेकवारभुक्तिमन्यद्वा किञ्चित्पुण्यसंपादकंकर्म केचिदाचरन्ति । तत्सर्वं यदि कर्तृप्रारब्धाधीनं तर्हि तादृश कर्मभिः कर्तुः पुण्यफलमेव नस्यात् । किञ्च ज्ञानसंपादनार्थं क्रियमाणायाः कृषेर्वैयर्थ्यमापद्येत । अत एतज्जन्मन्यनुभूयमानं सर्वमपि नप्रारब्धमेवेति शक्यते वक्तुम् । किंत्वेतज्जन्मनि पौरुषेणानिवर्त्यं सदवश्यमनुभोक्तव्यं यत्तदेव प्रारब्धकर्मेति सुष्ठूपपद्यते । यथा आजन्मदारिद्र्यमाजन्मधनिकता आजन्मरोगो नीरोगता संतानसौख्यं तद्दुःखंचेत्यादयः प्रारब्धफलानि । आजन्मरोगनीरोगतादीनां पितृमातृशरीरस्थितिमूलकत्वं प्रकृति



शास्त्रज्ञा वदन्ति । दत्ततोत्तरदायादत्वदानादिवशादप्रयत्नं धनराज्यादिके लब्धे तत्र प्रारब्धंविना किमन्यत्कारणं वक्तुं शक्येत । कस्यचित्संतानार्थमनेककळत्रपरिग्रहेऽपि संततिरेव नभवेत् । कस्यचित्स्त्रीसंततिरेव जायेत । नजायतएव वंशकर्ता पुंशिशुः । अतएतत्सर्वस्यापि प्रारब्धमेव कारणमित्यवशेनाप्यङ्गीकर्तव्यम् । जनुषांधः कश्चन दृढशरीरी भवति । तत्पितरावपि दृढशरीरावेवभवेताम् । अत्रान्धस्य प्रारब्धंविना किमन्यत्कारणमुपपद्यते । जन्मान्तरमनङ्गीकुर्वन्त आस्तिका एवंविध जात्यन्धत्वाप्रयत्नधनराज्यलाभादेः किंवाकारणं ब्रूयुः । अतः प्रारब्धमित्यवश्यमङ्गीकर्तव्यम् । पुनश्चैतत्कर्मत्रयस्वरूपं संक्षेपतो निरुच्येममुपन्यासमुपसंहरामि । पौरुषेणैतज्जन्मनि कृतं भविष्यतिजन्मनि जन्मसुवा फलानुभावकमागामि । यद्वा वर्तमानमित्युच्यते । एकजन्मनि नानाविधकर्मफलानुभवानवकाशादनुभूतशिष्टं पूर्वस्मिन्जन्मनि जन्मसुवा संपादितं कर्मजातं सञ्चितम् । पौरुषेण निवर्तयितुमशक्यं सदवश्यमेतज्जन्मन्यनुभोक्तव्यं पूर्वस्मिन्जन्मनि जन्मसुवा कृतं कर्म प्रारब्धम् । अस्योपन्यासस्य कर्मविभागे तदनुभवेच विषये प्रवृत्ततयाऽनुभवविषयमनुसृत्यावश्यवक्तव्यमन्यत्किञ्चिदस्ति । वर्तमान सञ्चितप्रारब्धकर्मणा मनुभवोऽस्मिन्जन्मनि परस्मिन्नपि जन्मनि

जन्मसुवा भवेदित्यवोचम्। तर्हि स्वर्गनरके किमर्थमङ्गीकरणीये। इत्येतदुपन्यासं शृण्वतां केषाञ्चिच्छंका जायेत। अत्रोच्यते। एकैकस्यजन्मनोऽन्ते मानवशरीराननुभाव्ययो स्सुखदुःखयोरनुभवार्थं तयोरवश्यमभ्युपगन्तव्यतेति। तत्रानुभूयमानं सुखदुःखादिकं वर्तमानकर्मणः फलमित्येव विज्ञेयम्। एतत्कर्मत्रयं ज्ञानाग्निना दग्ध्वा चेतनश्चरमपुरुषार्थमधिगच्छति। अंत्र वर्तमान सञ्चितयोरेव ज्ञानेन विनाशो नतु प्रारब्धस्येति मतत्रयनिष्ठा वदन्ति। किञ्च प्रतिपादयन्तिच पुराणस्थाः केषाञ्चित्कथा उद्धृत्य ज्ञानोत्पत्तावपि कतिपयजन्मपर्यन्तं प्रारब्धं ननश्यतीति। तन्नसमञ्जसम्। तथाविधज्ञानिनां समग्रतया ज्ञानं ननिष्पन्नमित्येव कुतो नोच्येत ॥ श्लो ॥ यथैधांसि समिद्धोग्निर्भस्मसात्कुरुतेऽर्जुन। ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथेति भगवद्वाक्यानुसारेणाग्नौ पातितानीन्धनानि दार्ढ्यादार्ढ्यवशात्पौर्वापर्येण सर्वाण्यपि दह्येरन्खलु। दृष्टान्त स्वारस्याच्च पूर्णज्ञाननिष्पत्त्यनन्तरं सर्वाण्यपि कर्माणि नश्यन्त्येवेति वक्तुमुचितम्। किञ्च यदिच सर्वाणीत्यत्र प्रारब्धांतिरिक्तानि सर्वाणीत्यर्थ,-इत्युच्यते तदाऽऽगामि सञ्चितयोरेवं वक्तव्यतया तन्मात्रबोधकं द्विवचनमेव प्रयोक्तव्यं स्यात्। नत्वविशेषेण सर्वकर्माणीति बहुवचननिर्देश उपपन्नः। किंतु



ज्ञाननिष्पत्त्यनन्तरं ज्ञानिनो बाणवेगवत्प्रारब्धवेगो वर्तेतेति ग्रन्था अभिदधति। ज्ञानोत्पत्तेः पश्चादपि बाणवेगवत्कंचित्कालं शरीरं तिष्ठेत्। शरीरावस्थानपर्यन्तं प्रारब्धवेगो वर्तेतत्येव तद्ग्रन्थाभिप्रायइति युक्तमुत्पश्यामः। नत्वज्ञानिवद्देहत्यागपर्यन्तं पूर्णज्ञान्यप्यनुभाव्यं प्रारब्धमनुभवंस्तिष्ठतीति। ज्ञानोत्पत्तेश्शरीरत्यागस्यच मध्ये सूक्ष्मकाले तस्य ज्ञानिनश्शरीरमस्तीतिहेतुना शरीरत्यागपर्यन्तं प्रारब्धवेगाङ्गीकार आवश्यकः। ज्ञानोत्पत्त्यनन्तरं ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां च व्यापारः स्वतएव निवृत्तो भवेत्। तदुपरि प्राणस्तच्छरीरं यथा त्यजति सच प्रकारो ज्ञानिनैव ज्ञातव्यः। नत्वस्मादृशाज्ञानिभिर्वक्तव्य इत्येतद्व्यासमुपसंहरामि ॥

वें. श्वे. रं.



॥ श्रीकृष्ण ॥

## ॥ मतत्रयविषयः ॥

द्वैताद्वैतविशिष्टाद्वैताख्यमतत्रयविषये परस्परभेदाः किमर्थमासन् श्रीमच्छङ्कररामानुजमध्वाचार्या अस्मदीयवेदवेदान्तादीन् प्रमाणीकृत्यैव कीदृशाभिप्रायेण मतत्रयस्याचार्या अभूवन्नित्यादिविषयान् यथामति परिशीलितुमिच्छन्नहं विंशतिहायनप्रभृति बहूनां पण्डितानां सकाशे तत्तन्मतविषयान्यथाशक्त्यज्ञासिषम् । एकैकमतसाधकश्रुतिस्मृतीनां तदितरमताचार्यनिश्चितार्था अपि तत्तन्मतनिष्ठाभिहितास्तत्तन्मतेष्वतिसमञ्जसमनुविद्धा भवन्ति । किञ्च मतत्रयनिष्ठानां देवताराधनक्रमः कर्मणां विधानमाचारश्चेषद्वैषम्यमेकविधमेव विधीयन्ते । मतत्रयाचार्याशयानजानानास्तदन्तेवासिनोऽसूयाविष्टमतयोऽमुख्येषु कांश्चिद्भेदानकुर्वन् ॥

एतन्मतेषु बहोःकालादारभ्यैवं स्थितेषु कलियुगेऽस्मिञ्च्छ्रीशङ्कराचार्य एतादृशाभिनिवेशेन पुनरप्यद्वैतमतं किमर्थमतनोदिति किञ्चिद्विचारयामः । देशकालानुसारेण श्रीभगवदवतारा राजकीयशासनानि मतानां व्यवस्थाश्च भिद्यन्ते ।

महाभारतयुद्धे महत्सु राजसु हतेष्वपि पाण्डववंशीया राजानो यावदिमं देशमपालयंस्तावत्पर्यन्तं यद्वा नन्दोपनामकस्य पद्मनायकाभिधानस्य महाराजस्य परिपालनपर्यन्तंवाऽस्मद्धिन्दूमतं वेदविहितकर्मानुरोधीत्यवगम्यते । तदनन्तरमेतद्देशस्यैकमहाराजपालनाभावाद्भिन्नभिन्नराष्ट्राणां भिन्नभिन्नाः प्रभव आसन् । सर्वाधिकारिणएकस्य प्रभोरभावाद्भिन्नभिन्नप्रभूणामन्योन्यविरुद्धस्वभावत्वाच्च राजनीतिमार्गा आचाराश्च निरभिद्यन्त । तत्तद्राजास्थानविद्वांसोऽपि स्वस्ववैदुष्यप्रसिद्धये वेदवेदान्तादिग्रन्थानां परस्परविरुद्धार्थानवोचन् ॥

एवं स्थिते बुद्धाभिधानो बौद्धमताचार्यस्सहस्रद्वयोपरि द्व्युत्तरषट्शततमे कल्यब्दे यद्वा क्रीस्तुशकात्पूर्वं पञ्चशत वत्सरकालात्प्राग्जनित्वा निरीश्वरवादं कुर्वन् बहूंस्स्वयुक्तिभिस्स्वीयमते प्रवेशयाञ्चकार । अन्ततस्स्वपितरावपि यदा प्रावेशयत्तदा स्वपितुरपि कस्यचिद्देशस्य प्रभुत्वात्तद्राष्ट्रीयास्सर्वेऽपि बौद्धा अभवन् । बुद्धोऽपि प्रथमतो द्वितीयाश्रमी सन्नेव पश्चान्निर्विण्णइदं मतमतानीत् । अस्मद्धिन्दूदेशीयार्वाचीनचरित्रं चन्द्रगुप्तमारभ्य लिखितमस्ति । स चन्द्रगुप्तः कानिचिद्राष्ट्राण्यपालयत् । किन्तु स हिन्दूमतएवातिष्ठत् । तदनन्तरमशोकोनाम राजा देशमिमं ररक्ष । अयन्तु बौद्ध



मतमेवाग्रहीत् । पश्चात्कनिष्काभिधानो राजा सूर्यमुपासीनः क्रमेणाग्निं जलञ्चोपासितुं प्राक्रमत । अभूदयमन्ततो बौद्ध मतावलम्बी । तदनन्तरं शिलादित्यनामको राजा बौद्धमतस्थ एव राज्यमरक्षत् । कालोऽस्य क्रीस्तुशक एकोनत्रिंशदुत्तरषट्शततमवत्सरप्रभृति पञ्चचत्वारिंशदुत्तरषट्शततमवर्षपर्यन्त आसीत् । तत्प्रभृति श्रीशङ्कराचार्योत्पत्तिपर्यन्तमयं बुद्धसिद्धान्तः प्रत्यहं प्रवर्धमानआसीत् । बुद्धस्यापि कालः क्रैस्तव शकात्पूर्वं पञ्चशतवर्षपरिमितोऽभवत् । श्रीशंकराचार्यकालस्तु सप्ताशीत्युत्तरसप्तशततमसंवत्सरसम्मितअभूत् । एतत्सप्ताशीत्युत्तरद्वादशशतसंवत्सरेष्वेतद्बौद्धमतं गाढतरमभिव्याप्य न केवलमस्मिन्नेव देशे किन्तु बर्मा चीना जपानिति प्राग्देशेषु सिंहळद्वीपेचावर्तत ॥ अद्यापि बर्मादिदेशस्था बौद्धमतनिष्ठा एवाभिवर्तन्ते । श्रमकराणि वेदविहितकर्माणि परित्यज्य प्रवर्तनमेवातिसमञ्जसमिति तदा प्रजा अमन्यन्त । तस्मात्सत्वरमेव च स बुद्धराद्धान्तोऽस्मिन्देशे सर्वत्र व्याप्नोत् । एवं स्थिते श्रीमांच्छ्रीशङ्कराचार्याख्यो महापुरुषउद्भूय सकल शास्त्राण्यभ्यस्य निरीश्वरमतमेवमभिव्याप्तमिति गरीयस्या चिन्तया समाक्रान्तएतन्मतमुन्मूलयितुं किंवा साधनमिति चिरं विचिन्त्याद्वैतसिद्धान्ताभिवर्धनान्नान्यउपाय इति निश्चित्य

तत्सिद्धान्तमभिवर्धयाञ्चक्रे । ईश्वरः कश्चिदस्ति । तेनैवायं विचित्ररचनासमञ्चितः प्रपञ्चो निरमीयत । सचानेनप्रकारेणाराधनीयइति पूर्वसिद्धान्तस्य विरुद्धमीश्वरो नास्त्येव सर्वोप्ययं प्रपञ्च स्वभावादेवोदजायतेति बुद्धसिद्धान्तविश्वासं निरस्य वेदविहितकर्मसु प्रजा अनुरञ्जयितुं "जीवेश्वरयोरभेदः ईश्वरस्त्वंचैकपदार्थएव । उपाधिभेदेनैव युवयोर्भेदो न स्वतः । अनाद्यविद्ययाचाभेदमजानानः प्रवर्तसे ॥ यथाविधि विद्या अभ्यस्य वेदविहितसगुणोपासनं कुर्वंस्तथाविधाज्ञानं निरस्ये" दित्युपदिश्याद्वैतसिद्धान्तोपयुक्तश्रुतिस्मृतीरुद्धृत्य बोधनात्ताद्दशेश्वरएव खल्वहमित्युत्पन्नाहङ्कारेण सर्वे जना बौद्धमतं परित्यज्याद्वैताभिरुचयो वेदविहितकर्मसु यथापूर्वं प्रावर्तन्त। बौद्ध मतव्याप्तिपरिजिहीर्षया तत्कालानुसारेणाद्वैतमतप्रवर्तकोऽपि वस्तुतश्श्रीशंकराचार्यो नाद्वैतीति मम विश्वासः ॥

प्रकृतकालीनो वाराणसीपुरवासी सर्वतन्त्रस्वतन्त्रः पण्डित श्रीराममिश्रशास्त्री स्वरचिततुरीयमीमांसाग्रन्थस्योपोद्घाते एतमेवाभिप्रायं स्पष्टीकरोति ॥ बौद्धमतप्रविष्टान् विनाऽस्मद्धिन्दूमतस्थाः शंकराचार्यकालात्पूर्वं प्रत्येकं पञ्चदेवता आराधयन्तोऽतिष्ठन्त। तांत्सर्वानेकीभावयितुं शङ्करः पञ्चदेवताराधनमुपदिदेश। किञ्चाद्वैतमतनिष्ठानां निर्गुणोपासनएव प्रधाने स्थिते



न केवलं गृहस्थानां किन्तु सर्वसङ्गपरित्यागिनामपि सन्यासिनां सगुणोपासनमेव प्रधानमिति निश्चित्य चतुर्षु स्थलेषु चत्वारि देवताराधनपीठानि संस्थाप्य पञ्चदेवताराधनमकारयत् । एकस्थलेचेत्सर्वैर्नज्ञायेतेति खलु स्थलचतुष्टये तथाविधानि पीठान्यस्थापयदिति प्रतिभाति । सच यद्यद्वैतविश्वासी तदा सन्यासिनामपि सगुणोपासनं कर्तव्यमिति किमर्थं न्ययच्छदिति किञ्चिद्विचार्यताम् । श्रूयते हि श्रीशंकराचार्ये भिक्षार्थं कस्यचिद्गृहं गते तद्गृहिण्यां "स्वामिन भिक्षां दातुं नास्मद्गृहे किञ्चिदप्यस्ती" त्यतिदीनं वदन्त्यां तामनुगृह्य श्रीमहालक्ष्मीं संप्रार्थ्य तस्या ऐश्वर्यमदापयदिति ॥

काश्यां चण्डालरूपेणागतेन शिवेन श्रीशंकराचार्यस्य प्रवृत्ते संवादे त्वां ज्ञातुं पर्याप्तं ज्ञानमद्यापि मम नोत्पन्नमिति शिवं श्रीशंकराचार्य अस्तौषीत् । किञ्च विदितमेव खलु तत्रभवतां भवतामेकदा श्रीशंकराचार्यः केनचित्कापालिकेन वञ्चितस्तस्य स्वशिरोदानाय वरं प्रादात् । तदनु तस्मिन्कुठार पाणौ मस्तकं छेत्तुमुद्युञ्जाने सति तं दृष्ट्वा लक्ष्मीनृसिंहोपासकः शङ्करान्तेवासी स्वामिनं प्रार्थयामास । तदा पद्मपादनामकं तमाविश्य तथाविधं कापालिकं संहृत्य रौद्राकारेण देदीप्यमाने श्रीलक्ष्मीनृसिंहे तदानीमाचार्यस्तत्कोपमुपशमयितुं

"शिवस्य कोपो युक्तस्तवतु नेदं लक्षणमि"त्यनेकविधं श्री स्वामिनं स्तुत्वा प्रसन्नमकरोदिति। अन्यच्च परकायप्रवेशविद्यया श्रीशंकराचार्ये कस्यचिद्राज्ञश्शरीरमनुविश्य स्थिते स्व शरीरस्य दहनावसरेचोपस्थिते हित्वा तद्राजदेहं पुनस्स्वकायं प्रविश्य "श्रीलक्ष्मीनृसिंह, हस्तमालम्बनं दत्वा मामस्या श्रितेरुद्धरे"ति किमर्थं प्रार्थयामासेति समीरयन्ति। पश्यत ॥

निगदन्ति चायमाचार्योऽवतारईश्वरस्येति । तर्हीश्वरः कश्चन पृथगस्ति खलु । किञ्चायमाचार्यो बहूनि पुण्य तीर्थानि गत्वा तत्तत्स्थलदेवतास्समाराधयत् । रचयाञ्चकार चाच्युतगोविन्दाद्यष्टकानि शिवाष्टकानि च स्वयम् ॥

तस्मादयमाचार्यस्तदवसरमनुसृत्याद्वैतोपदेष्टाऽपि स्वयं नाद्वैतीति निर्विचिकित्सं निगदितुं शक्नुयाम् । अयमाचार्यस्स्वल्पमेव कालमजीवत् । अजीविष्यच्चेद्द्राघीयांसमेव कालं तदा बौद्धमतं निश्शेषमुन्मूल्य पुनरपि जीवेश्वरभेदमेवोपादेक्ष्यत् । बुद्धसिद्धान्तमपाकृत्य पुनरपि विधिविहितकृत्येषु जनानामनुरागोत्पादनादाचार्योऽयमेवेतरमताचार्यापेक्षया महानिति सर्वैरपि निश्चेतव्यम् ॥

श्रीशंकराचार्यानन्तरं तच्छिष्याः प्रशिष्याश्च केचन



स्वाचार्योद्देशं तथाविधावसरंचापरीक्ष्य नियामकः कश्चनेश्वरो नास्त्येवेति विशृङ्खलविहारिभ्यो बौद्धेभ्यश्चाधिकं प्रभ्रष्टा अहमीश्वर इति गर्वोद्रेकेण देवताराधने सक्तिं हित्वा प्रच्छन्नबौद्धा बभूवुः । तेभ्योप्यविवेकिनः केचन वस्तुमात्रेप्यभेदं मन्वानाः कान्ताकनकादिष्वपि भेदशून्या अवर्तन्त । एवं प्रकारेणाद्वैतिनो बौद्धेभ्योऽप्यतीव स्वव्यापारेषु विभ्रश्यन्तश्शंकराचार्य कालादारभ्यैकोनत्रिंशदुत्तरद्विशतवत्सरपरिमितकालपर्यन्तमभूवन्। एवं स्थिते श्रीमान् रामानुजाचार्यष्षोडशोत्तरैकसहस्रतमे वर्षे जात्वाऽधीतसकलविद्यस्सर्वास्तिकमतस्थानामाराधन विधेरनुकूलं विशिष्टाद्वैतमतं व्यवास्थापयत्। तत्कालीनाद्वैतिष्वभेदभावनयाऽहमेवेश्वरइति गर्वमुपगतेषु "चिदचिद्विशिष्टात्परमेश्वरादन्यत्किञ्चिन्नास्ति । परमात्मवत्त्वमपि नित्यः । त्वमपि तं परमात्मानं यद्याराधयासि तदा वैकुण्ठलोके लक्ष्मीकौस्तुभगरुडजगद्व्यापारैर्विना तत्समस्तद्वन्नित्यश्च भूत्वा स्थास्यसी"त्यबोधयत्। अतएवैतन्मतस्य विशिष्टाद्वैतसंज्ञा साधु सङ्गच्छते। किञ्च चिदचिच्छून्यस्य भगवतस्स्थित्या किं प्रयोजनम् । तयोस्सत्त्वादेव खलु विविधविचित्रसृष्टिर्भवति । एवं विशिष्टाद्वैतमतं स्थापयित्वा "न केवलं ब्राह्मणानामपितु स्त्रीणां शूद्राणांचाष्टाक्षरीमहामन्त्रजपाधिकारो वर्तते। तेषामपि चरम

पुरुषार्थोऽस्ति। भक्त्यपेक्षया प्रपत्तिस्सुलभोपाय'' इति सिद्धान्तीकृत्याराधने सर्वजनादरणीयसुलभविधिं निरचैषीत्। शंकराचार्येणाराधयितुं निर्णीतानां पञ्चदेवतानां मध्ये श्रीमन्नारायणस्य त्रिमतस्थाङ्गीकृते गीताशास्त्रे तदितरग्रन्थेषु चोत्कृष्टत्वेनोक्तत्वात्सएवाराधनीय इति निर्णीयान्यदेवताराधनं नाङ्गीचकार। अपि च नारायणस्सकलदेवतोत्कृष्ट इति विश्वासादेव शङ्कराचार्यप्रमुखाद्वैतसन्न्यासिनोऽप्यन्यदीयवन्दनावसरे नारायणशब्दमेवोच्चरन्ति। तादृशविशिष्टाद्वैतमतं नकेवलमास्तिकशास्त्रसम्मतम् अपित्वीश्वरएव नास्तीति मतादीश्वरोऽहमेवेति मताच्चाधिकतरयुक्तियुक्तं मुक्तिफलप्राप्तेस्सुलभसाधनं चावर्तत। अतएव दिनदिनप्रवर्धमानं सद्बौद्धाद्वैतेत्वधरीचकार। अपिच मध्वाचार्यः क्रीस्तुशके सप्तदशोत्तरैकादशशततमवत्सरे जातः द्वैतमात्रप्रतिपादकानेकश्रुतिस्मृतीनां विद्यमानत्वाद्द्वैतनामकमेकं मतमद्वैतमतनिवृत्तये व्यरचयत् ॥ एतन्मतस्य विशिष्टाद्वैतस्य च प्रबलतरभेदा न सन्तीति वक्तुमुचितम्। द्वैते क्वचित्क्वचित्प्रतिपादिता अपि भेदा न समञ्जसा इति प्रतिभाति। किन्तु पामरानुद्दिश्याभिहितेषु पुराणेषु कानिचिद्वाक्यानि श्रुतिस्मृतिवत्प्रमाणीचकार। तथाविधानामपि सुबोधो भवेदित्याशयेन तथा व्यलिखदिति परिस्फुरति। रामा-



नुजमध्वाचार्ययोर्मध्यकाल एकोत्तरशतवत्सरात्मकआसीत्। रामानुजाचार्यस्तु शतवत्सरोपरि किञ्चित्कालमजीवत्। मध्व रामानुजाचार्यावुभावप्यद्वैतमतनिवृत्तय एव द्वैतविशिष्टाद्वैते निरूपयाञ्चक्रतुः। अतः पूजनीयौ। रामानुजाचार्यो विशिष्टाद्वैतभाष्यमरचयदिति मध्वाचार्येण नाज्ञायतेति प्रतिभाति। अतएव तत्सिद्धान्तं नादूषयत्। किञ्च यदि मध्वाचार्यो रामानुजभाष्यमद्रक्ष्यत्तदा तत्सिद्धान्तमेव बलिष्ठमकारिष्यत् ॥

श्री शंकराचार्यो जीवेश्वराभेदमुपदिदेशेति तन्मतस्थास्तमीश्वरावतारं मन्वते। श्री रामानुजाचार्यस्तु जीवोऽपीश्वरवन्नित्यइत्यकथयदिति तं तन्मतस्था वैकुण्ठस्थितनित्यसूर्यन्तर्गत शेषावतारं कथयन्ति। श्री मध्वाचार्योऽपि मुक्तिदशायामपि जीवेश्वरयोः प्रत्येकं जीवानांचानन्दतारतम्यं स्वरूपतारतम्यं चास्तीत्यवोचदिति द्वैतिनस्तमेतल्लोकसम्बन्धिषु पञ्चभूतेषु प्रधानस्य वायोस्स्वरूपमाचक्षते। यथातथावा भवतु मतत्रयाचार्याः पूजनीयाइत्यत्र न सन्देहः खलु ॥

॥ उपसंहृतोऽयं मतत्रयोपन्यासः ॥

वे. श्वे. रं.

---